संस्कृतविद्यासमिति-पत्रिका

# संस्कृतश्रीः

# SAMSKRITASRI

# ஸம்ஸ்க்ருதஸ்ரீ:

A Monthly Journal of
Samskrit Education Society

தனி ப்ரதி
விலை ரூ. 4

JANUARY 2020

ஸம்ஸ்க்ருத கல்விக்
கழக மாத இதழ்
212/13-1,
செயிண்ட் மேரீஸ் ரோடு,
மந்தைவெளி, சென்னை-28



महः परास्ताखिललोकपापं समस्तदेवाश्रयवर्ष्म दिव्यम्।
श्रीकामधेन्वाख्यममेयकाशमुपास्महे सर्वदमाश्रितानाम्।।

எல்லா மனிதர்களின் பாவத்தை ஒழிப்பதும் எல்லா தேவர்களுக்கும் இருப்பிடமான உடலை உடையதும் தெய்வத்தன்மை வாய்ந்ததும் அளப்பரிய ஒளியுடையதும் அடைந்தோருக்கு அனைத்தையுமளிப்பதுமான காமதேனு என்ற பெயருடைய ஒளியை வணங்குகிறோம்.

गोपूजा १६.०१.२०२०

☎ 24951402

உ

# THE SAMSKRIT EDUCATION SOCIETY (Regd) MADRAS

Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.

Secretary & Treasurer : **Sri G. SITHARAMAN**, F.C.A.
Editor and Publisher : **S. SRINIVASA SARMA**
Associate Editor : **Dr. G. Sankaranarayanan**
Department of Sanskrit,
SCSVMV Univeristy, Enathur,
Kanchipuram, Tamilnadu
Cell : 99941 03957

---

1. ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், ஆழ்வார்ப்பேட்டை 98843[illegible]22[illegible]
2. ஸ்ரீமதி சாந்தி அசோக், மந்தைவெளி 24[illegible]514[illegible]
3. ஸ்ரீமதி கௌரீ கருணாகரன், மைலாப்பூர், 24[illegible]05[illegible]
4. ஸ்ரீமதி ரமாசுந்தரராஜன், சென்னை -95, 65[illegible]76.[illegible]
5. ஸ்ரீமத் பார்வதீ ராமசந்திரன் அண்ணா நகர் 2[illegible]57[illegible]
6. ஸ்ரீ R. முத்து கிருஷ்ண ன் கொரட்டூர் 2[illegible]24[illegible]
7. ஸ்ரீ S. ரங்கநாத சர்மா, சேலையூர் 22[illegible]91720
8. ஸ்ரீமதி புவனேச்வரீ ராஜகீழ்பாக்கம் 9841212047
9. ஸ்ரீ K. ராஜேச்வரீ மாடம்பாக்கம் 9962837319
10. ஸ்ரீ S. ஹரிஹரன் நங்கைநல்லூர் 9841403859
11. ஸ்ரீ S. அனந்தன், மதுராந்தகம் 9894709418
12. ஸ்ரீ P.R. சுப்ரமண்யம், முகிலவாக்கம் 42649052
13. ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய ஸ்ரீரங்கம் 2430632
14. ஸ்ரீமதி ராஜம் சுந்தர், திருநெல்வேலி 9488326850
15. ஸ்ரீ P.D. ஸ்ரீநிவாஸன், திருநின்றவூர் 9445703470
16. ஸ்ரீ R. ரங்கநாதன், காஞ்சீபுரம் 97910 55428
17. ஸ்ரீ C.A. ஏகாம்பரம், கோயம்புத்தூர் 0422-2233242
18. ஸ்ரீமதி டி.வி. ஜயலக்ஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, 0487-2382964
19. ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், Mumbai East 09757115154

ஸ்ரீ வி. கோதண்டராமன், Mrs. கீதா ரேகா, ஆதம்பாக்கம் 9444469638.

# संस्कृतश्रीः

माला : ४२ JANUARY 2020 पुष्पम् : ०१

कलि : ५१२१ विकारी - मकरमासः ४२-०१


The Samskrit Education Society Established with the blessings of His Holiness **SRI MAHASWAMIGAL** of Kanchi Kamakoti Peetam in the year 1957.

**OFFICE:**
Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai – 600 028.

**PRESENT ACTIVITES**

1. Assisting study of Sanskrit.
2. Publication of books and monthly journal SAMSKRITASRI.






**SUBSCRIPTION RATES**

| | |
|---|---|
| ANNUAL | : Rs. 40/- |
| LIFE SUBSCRIPTION | : Rs. 400/- |
| PAGE DONATION | : RS.200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer.

**DD/Cheque should be sent by Speed Post only**



**The Samskrit Education Society (Regd.),**
Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai - 600 028.
**Ph: 044 - 24951402 / Email: editorsamskritasri@gmail.com**

# सम्पादकीयम्





**स्वरमधुरसुभङ्ग्या वल्लकीवाच्छलेखैः**
**विबुधनिचयहार्दं मादयन्ती नितान्तम्।**
**विविधविषयबोधैः शास्त्रजिज्ञासुलोकं**
**भुवि खलु रमयन्ती राजते संस्कृतश्रीः।।**

नवनवानन्दोत्साहान्वेषणक्षणसंलग्नमनोविनोदभाजो युवानोद्य दृश्यन्ते। अभिनवानन्दममन्दं सर्वथा काङ्क्षमाणाः बाह्यवस्तुलाभमेव तन्निदानमिति विचिन्तयन्तः विविधविरुद्धकार्यलग्नाः क्षणिकाभिरानन्दकणिकाभिः निर्वृत्याभासं भजन्ते। किन्तु जीवितस्य सत्यं लक्ष्यमजानन्त इमेऽजानन्द इव बल्युन्मुखे दत्तश्रद्धाः लौकिकसुखेष्वनारतं रताः शास्त्रादिविहितं अविहतमपि मार्गं कालानुचितं काल्पनिकं वा मन्यमानाः स्वेच्छया पर्यटन्ति। किन्तु क्षणिकानन्दजनितनिर्वृत्याभासेन असन्तृप्ताः पौनःपुन्येन तत्रैवान्विष्यन्तः जीवितान्ते सत्यं जानन्तोप्यतीतकालं स्मारं स्मारं दुःखहारेणेवावृताः अन्तिमदशायां भक्त्यादिकार्यक्रमेषु कृतानां शास्त्रविरोधानां प्रायश्चित्तमिवाचरन्तीति प्रत्यक्षगोचरोऽयं विषयः। अतः बाल्यादारभ्य शास्त्रविहितो मार्ग एव श्रेयानित्युद्बोधनं यद्यभविष्यत् कस्तूरीमृग इव आनन्दान्वेषणतत्पराः एते नाभविष्यन्। अत आह गीताचार्यः-

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परांगतिम्।।**

इति। तदर्थमेव मुनिभिः दीर्घदर्शिभिः बाह्यवस्तुजनितानन्दानां क्षणिकत्वं प्रदर्श्य नित्यशुद्धानन्दप्राप्तये राजमार्ग इव कश्चनाध्वा विहितो यः ऐहिकामुष्मिकश्रेयसे भवति। अतः एवेदानीमाश्रमादिषु योगादिबोधकेषु जनसम्मर्दो महान्दृश्यते यः प्राचीनमार्गानुसृतानन्दप्राप्तये कृतप्रयत्नः। अतः इदानीं शास्त्रानुसारिणो मार्गस्य पुरतो निदर्शमस्माकं कृत्यं भवति येन भाविनी सन्ततिः नित्यानन्दाप्त्यै यतेत। तदिदं सर्वकृत्यमिति हेतोः सर्वैनुष्ठेयो बोधनीयश्च शास्त्रमार्ग इति प्रार्थयते सम्पादकवर्गः।

# बालीप्रत्यभिज्ञानशतकम्

**Prof. ABHIRAJA RAJENDRA MISHRA**
Formerly Vice-Chancellor, Varanasi

तपःस्थलीयं नैकेषां योगिनां च तपस्विनाम्।
ऋषीणां धर्मधुर्याणां तीर्थानां तीर्थमुत्तमम्।।६१।।

करंगासमके सौम्ये स्थले शान्ते मनोरमे।
तीर्थगंगाभिधं केन्द्रं क्लुंगकुंगमहीभुजाम्।।६२।।

जलक्रीडाभिषेकाणां स्थानमेतन्मनोहरम्।
भूभुजश्चक्रिरे तुष्ट्यै जनशून्येऽत्र नीवृतिः।।६३।।

निपानैर्बहुभिर्युक्ता धारायन्त्रादिसम्मिता।
गोपुरद्वारवेदीभिस्तीर्थगङ्गा महीयते।।६४।।

किञ्चिदेवाग्रतो गत्वा क्षीणा बालीवसुन्धरा।
साम्प्रतं लक्ष्यते प्राच्यां केवलं नीलतोयधिः।।६५।।

अत्रस्थोऽपि जनः सम्यग् व्योम्नि निर्मेघतां गते।
द्रष्टुं शक्नोति लोम्बोकं निषधाख्यञ्च पर्वतम्।।६६।।

द्वीपं नूसापनीडाख्यं दक्षिणस्यां विलोक्यते।
पञ्चविंशतिसाहस्री जनता यत्र जीवति।।६७।।

ततो गोबालवाहाख्यं कन्दराद्वारमद्भुतम्।
सिन्धूपकण्ठगं रम्यं राजमार्गे महीयते।।६८।।

वासुकेः कन्दरा सेयं भीषणा वर्तुलानना।
लाङ्गूलेन महामेरुं स्पृशत्यब्धिं मुखेन च।।६९।।

पतन्तश्चोत्पतन्तश्च शयाना रतिसंरताः।
युध्यमानाश्च दृश्यन्ते खगा नैशाः सहस्रशः।।७०।।

क्वचिद्गोधः स्फुरज्जिह्वः क्वचित्काकोदरोऽथवा।
गुहाद्वारेऽथ दृश्येते निशापक्षिग्रहाकुलौ।।७१।।

सत्याऽसत्यपरीक्षायाः स्थलीयं लोकविश्रुता।
प्रविश्येमां स्वसाधुत्वं प्रतेनू राजदण्डिताः।।७२।।

प्रविष्टा भक्षिता नागैरपराद्धा गुहान्तरे।
सत्यनिष्ठाः परन्त्वेके निर्भयं बहिरागताः।।७३।।

कुंगकुंगाधिपानां तत् दैवतं निर्णयासनम्।
मानवीं स्मृतिमाधत्ते विषाग्र्यम्बुपरीक्षणे।।७४।।

कुंगकुंगसमीपस्था गेल्गलाख्या पुरातनी।
दृश्यते नगरी रम्या नृधानी बालिभूभुजाम्।।७५।।

यथाऽयोध्या विना रामं विना कृष्णञ्च गोकुलम्।
विपन्नाऽभूत्तथैवेयं कुंगकुंगप्रभावतः।।७६।।

तथापि राजप्रसादा गोपुराणि पुरातनीम्।
भाग्यगाथां वन्दतीव दर्शं दर्शं सचेतसः।।७७।।

सारोंगवस्त्रनिर्माणे भव्यकौशेयमण्डिते।
प्रवीणाश्चात्र विद्यन्ते चित्रकर्मविशारदाः।।७८।।

गृहे-गृहे कुविन्दत्वं दृष्टिप्रसारबन्धनम्।
रंगकर्मयुतालेख्यं ककवीनकथाश्रितम्।।७९।।

शिशवश्छुल्लकाश्चापि दृष्टपञ्चवसन्तकाः।
वर्तुलोर्ध्वसमधस्तिर्यग् रचयन्त्येव किञ्चन।।८०।।

(अनुवर्तते.....)

# रघुवंशम्

**Sri. R.RANGANATHAN,**
Sanskrit Education Society, Kanchipuram

## द्वादशसर्गः अष्टसप्ततितमः श्लोकः

**स मारुतिसमानीतमहौषधिहतव्यथः ।**
**लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ।।**

### पदच्छेदः

सः, मारुतिसमानीतमहौषधिव्यथः, लङ्कास्त्रीणां, पुनः, चक्रे, विलापाचार्यकं, शरैः ।

### शब्दरूपाणि

सः - दका. पुं. प्र. एक ।
मारुतिसमानीतमहौषधिव्यथः - रामशब्दवत्
लङ्कास्त्रीणाम् - इका. स्त्री. ष. बहु. ।
पुनः - अव्य.
चक्रे - चक्रे चक्राते चक्रिरे
डुकृञ् करणे धातोः लिटि. प्र. पु. एक. ।
विलापाचार्यकम् - अका. नपुं. द्वि. एक ।
शरैः - अका पुं. तृ. बहु ।

### प्रतिपदार्थः

सः - அந்த லக்ஷ்மணன், मारुतिसमानीतमहौषधिव्यथः - ஹனுமார் கொண்டுவந்த ஸஞ்ஜீவினியால் உடல் நோய் நீங்கியவராய், पुनः - மீண்டும், शरैः - அம்புகளால், लङ्कास्त्रीणाम् - இலங்கையிலுள்ள பெண்களுக்கு,

विलापाचार्यकम् चक्रे - புலம்புதலைக் கற்பித்தார்,

**व्याकरणविशेषः**

**मारुतिसमानीतमहौषधिव्यथः** - महती चासौ ओषधिश्च महौषधिः। मारुतिना समानीता या महौषधिः मारुतिसमानीतमहौषधिः। तया हता व्यथा यस्य सः।

**विलापाचर्यकम्** - विलापे आचर्यकम्, तत्।

**लङ्कास्त्रीणाम्** - लङ्कायाः स्त्रियः, तासाम्।

**कोषः**

विलापः - विलापः परिदेवनम्

व्यथा - पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम्

**भावार्थः**

हनुमता आनीतया सञ्जीविन्या नष्टपीडः सन् लक्ष्मणः पुनः युद्धे राक्षसान् सुबहून् जघान। तेन राक्षसः स्त्रियः अरुदन्। तथा च राक्षसमारणेन लक्ष्मणः रोदनाचर्यकर्म चकार।।

(अनुवर्तते.....)

**भारतवाणी**

**विधातृविहितं मार्गं न कश्चिदतिवर्तते।**
**कालमूलमिदं सर्वं भावाभावौ सुखासुखे।। १.१.१८७**

விதியால் விதிக்கப்பட்ட வழியை எவரும் மீறுவதில்லை. இன்பமும் துன்பமும் இருப்பும் இன்மையும் என்னும் இவை எல்லாம் காலத்தாலானது.

# अष्टाङ्गहृदयम्

**Prof. S. SWAMINATHAN**
Sri Jayendra Saraswathi Ayurveda College, Poonamallee

**पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ।**
**हरन्ति शीतमुष्णाङ्ग्यो धूपकुङ्कुमयौवनैः ।।**

पीवर-ऊरु-स्तन-श्रोण्यः - பருத்தத் தொடைகள், ஸ்தனங்கள், நிதம்பங்களோடு இருக்கக்கூடியவர்களும், समदाः प्रियाः - பார்த்தால் இன்பமயக்கம் தருபவர்களும், தன்னிடத்தில் ப்ரியமாக உள்ளவர்களும், धूप-कुङ्कुम-यौवनैः उष्णाङ्ग्यः - உடலெங்கும் நறுமணப்புகையை காண்பித்துக் கொண்டதினாலும், குங்குமப்பூவை அரைத்துப் பூசியதனாலும், இளமையினாலும் சூடான உடலைக்கொண்டவர்களுமாகிய प्रमदाः - இளம்பெண்கள், शीतं हरन्ति - அவர்களுடைய ஆலிங்கனம் முதலியவற்றினால் உடற்குளுமையை போக்கடித்துவிடுகின்றனர்.

**अङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः ।**
**शीतपारुष्यजनितो न दोषो जातु जायते ।।**

अङ्गार-ताप-सन्तप्त-गर्भ-भू-वेश्म-चारिणः - தீக்கனலினுடைய சூட்டினால் சூடேற்றப்பட்ட நிலத்தோடு கூடிய வீட்டில் வசித்திருக்கக்கூடிய நபருக்கு, शीतपारुष्यजनितः दोषः - குளிர்ச்சியினுடைய கடுமையினால் ஏற்படக்கூடிய கெடுதிகளானது, जातु न जायते - ஒருபொழுதும் ஏற்படுவதில்லை. (அதனால் அதுபோன்ற வீட்டில் குளிர்காலங்களில் தங்கவேண்டும்.)

(अनुवर्तते.....)

## संस्कृतश्लोकानुरूपः - तिरुक्कुरळ्

### ११०. குறிப்பறிதல் सङ्केत-संज्ञानम्

श्रीकलियन् रामानुजजीयर् (भूतपूर्वः),
नाङ्गुनेरि

இருநோக்கு இவளுண்கண் உள்ளது ஒருநோக்கு
நோய்நோக்கொன் றந்நோய் மருந்து.
द्वे अस्या भवतो दृष्टी अञ्जनाञ्चितनेत्रयोः।
एका व्याधिप्रदा मेऽस्ति द्वितीया व्याधिभेषजम्।।

கண்களவு கொள்ளும் சிறுநோக்கம் காமத்தில்
செம்பாகம் அன்று பெரிது.
दृष्टिरावृत्य रहसि लघ्वी सञ्चालितानया।
कामोपभोगमोदार्धान्नूनं स्यात् भूयसी मम।।

நோக்கினாள் நோக்கி இறைஞ்சினாள் அஃதவள்
யாப்பினுள் அட்டிய நீர்.
मामपश्यदतिप्रेम्णा साथ सार्थयत ह्रिया।
स सङ्केतः प्रेमकृष्या आवयोर्वारिसेचनम्।।

யான்நோக்குங் காலை நிலன்நோக்கும் நோக்காக்கால்
தான்நோக்கி மெல்ல நகும்.
आनम्य पश्यति भुवं यदा पश्यामि तामहम्।
यदा न पश्यामि तदा दृष्ट्वा मां स्मयते मृदु।।

குறிக்கொண்டு நோக்காமை அல்லால் ஒருகண்
சிறக்கணித்தாள் போல நகும்.
साक्षान्न पुरतो दृष्टिं चालयित्वा ममोपरि।
संकोच्य वक्रदृष्ट्या सा दृष्ट्वा मां मोदते भृशम्।।

உறாஅ தவர்போல் சொலினும் செறாஅர்சொல்
ஒல்லை உணரப் படும்.
औदासीन्येनैव कामं प्रब्रुवन्तु सखीजनाः।
अक्रुद्धा मनसीत्याशु संविज्ञायेत तत्परम्।।

செறாஅச் சிறுசொல்லும் செற்றார்போல் நோக்கும்
உறாஅர்போன்று உற்றார் குறிப்பு.
वचांसि क्रुद्धजनवत् दृष्टिश्चापीह तादृशी।
ज्ञेयोऽनुकूलस्सङ्केतः सखीनां चेतसा मया।।

அசையியற்கு உண்டாண்டோர் ஏஎர்யான் நோக்கப்
பசையினள் பைய நகும்.
यदाहं प्रार्थनादृष्टिमचालयमथाधुना।
अभिख्या स्मयमानायाः कापि वल्ल्याः शनैरिह।।

ஏதிலார் போலப் பொதுநோக்கு நோக்குதல்
காதலார் கண்ணே யுள.
परस्परमसम्बद्धव्यक्ती इव परस्परम्।
सामान्यतः पश्यतो यत्प्रेमिणोरेव तद्भवेत्।।

கண்ணொடு கண்ணிணை நோக்கொக்கின் வாய்ச்சொற்கள்
என்ன பயனும் இல.
सुयोग्यनायकस्याथ नायिकायाः परस्परम्।
सप्रेमदृष्टिसंयोगे वचनैर्न प्रयोजनम्।।

(अनुवर्तते.....)

Articles for SAMSKRITASRI can be sent to:

editorsamskritasri@gmail.com

# रूपकावली - नाचिकेतम्

Prof. VISHNU POTTY. V.S.
Kanchipuram

( पात्राणि - नचिकेताः, यज्ञदत्तः, सोमः, माधवः, शिष्यः, वाजश्रवसः सार्वभौमशर्मा, सोमराजभट्टः, यज्ञपत्युपाध्यायाः, द्वारपालः, गुरुः, यमराजः, एकः, द्वितीयः)

**यत्र सर्वं विभात्येतद्यः सर्वत्र विभात्यपि।**
**सर्वदृक् सर्वसाक्षी च यस्तं ध्यायामि सर्वदा।।**

(माधवस्य गृहम्। माधवः
कस्मिन्नपि गृहकर्मणि व्यापृतः।
सोमः प्रविशति। )

**सोमः** प्रविश्य भोः।माधव।किं विलम्बसे।

**माधवः** सोम! गन्तुकाम इव कुत्रापि सज्जीभूय प्रस्थितोऽसि। कुत्र?

**सोमः** किं भवान्न स्मरति?

**माधवः** किम्?

**सोमः** अद्य किल सर्वमेधेन यजमानेन वाजश्रवसेन सर्वस्वं दीयते। तत्रैव परिग्रहार्थं गमिष्यामि।भवानपि सज्जीकृतवान् स्यादिति चिन्तयन् साकमेव गमिष्याव इति आगतवानस्मि। किं भवान्न गमिष्यति।

**माधवः** कार्यान्तरसंलग्नमनाः अहं नास्मरम्। मर्षणीयोऽयं जनः। किञ्चिदिव प्रतिपालयतु। शीघ्रं सज्जीभूय आगमिष्यामि। उभावपि सहितावेव चलिष्यावः।

(उभौ निष्क्रान्तौ)

(**प्रस्तावना** - वाजस्रवसस्य गृहम्। बहिः नचिकेताः यज्ञदत्तश्च वार्तालापं कुरुतः। नचिकेताः चिन्ताकुलस्तिष्ठति। यज्ञदत्तः उपागम्य नचिकेतः। चिन्ताकुलो दृश्यते। किं कारणम्।. अद्य किल निलायनक्रीडार्थमपि नायासि। किं तव हृदयं मथ्नाति।)

**नचिकेताः** दृष्टन्न त्वया अत्र पिता मे विश्वजिता इष्ट्वा सर्वं किल ददाति।

**यज्ञदत्तः** अन्नदाननिमित्तं यशः कामयमान एवं विश्वजिता यजते। तत्र कुलस्य महापुण्याप्तिर्भवति। एवं किल गुरवः उक्तवन्तः।

**नचिकेताः** तत्र मम सन्देहलेशोऽपि नास्ति। किन्त्वैवं चिन्तयामि।

**यज्ञदत्तः** किमिव?

**नचिकेताः** कदाचिच्चलभावात्स्यात्। किन्तु वक्ष्यामि। श्रृणु तावत्। गोदानादिकं दृष्ट्वा मम मनसि सन्देहो जायते। उदकपानासमर्थाः तृणानभ्यवहाराः दुग्धदाना-शक्ताः विगलितेन्द्रियाः प्रजननशक्ताः जीर्णाः याः गावः ताः ऋत्विग्भ्यो ददन्मम पिता परमानन्दयुक्तं स्थानं किमवाप्स्यसि इति।

**यज्ञदत्तः** चिरन्तानोपदेशस्तावदयम्। तत्र अप्रमत्ताः भवामः।

**नचिकेताः** नैवम्। यदि जिज्ञासा तर्ह्युपगन्तव्याः आचारनिष्ठाः गुरवः। तत्र यदि नाम मया पिता स्निग्धः तर्हि सता पुत्रेण मया आत्मप्रदानेनापि पितुरनिष्टं निवारणीयम्। अस्त्वैवम्। तावद्गत्वा पितरं पृच्छामि।

(उभौ निष्क्रान्तौ)

(अनुवर्तते.....)

# योगरहस्यम् - २९

**Prof. S. VENUGOPALAN**
SJSACH, Nazarathpet, Chennai

एतावता प्रथमे समाधिपादे को नाम समाधिः? सः कथं प्राप्यः? तत्रोपायाः। चित्तप्रसादनार्थं प्राचरणीयानि परिकर्माणि इति सविस्तरं निरूप्य, द्वितीये क्रियायोगनिरूपणसन्दर्भे क्लेशादीनां निरूपणपुरस्सरं विवेकख्यातेः सप्तविधत्वं निरूप्य तत्साधनानि च प्रपञ्च्य अष्टाङ्गयोगः निरूपितः। तत्र अन्तिमानां त्रयाणामङ्गानां निरूपणं तृतीये विभूतिपादे क्रियते। एतदवसरे एव चित्तस्य त्रिविधः परिणामः सविस्तरं प्रपञ्चितः। निरोधपरिणामः, समाधिपरिणामः, एकाग्रतापरिणामः इति ते त्रिविधपरिणामाः। अधुना परिणामत्रयसंयमात्... इति वक्ष्यमाणसूत्रस्य उपोद्घातसङ्गत्या सर्ववस्तुषु वैराग्याग्निप्रज्वलनाय चित्तवदेव अखिल प्रपञ्चेऽपि अतिदेशेनैव परिणामान् व्याचष्टे भगवान्, **एतेन भूतेन्द्रियेषु धर्म, लक्षण, अवस्थापरिणामाः व्याख्याताः** इति। एतेन त्रिविधमुक्तेन चित्तपरिणामेन स्थूलसूक्ष्मेषु भूतेषु, बुद्धिकर्मलक्षणभेदेन अवस्थितेषु इन्द्रियेषु धर्म, लक्षण, अवस्थाभेदेन त्रिविधः परिणामः व्याख्यातः अवगन्तव्यः। तत्र परिणामो नाम कः? कस्यापि वस्तुनः अवस्थान्तरप्राप्तिः परिणामः इत्युच्यते। यथा कार्पासः स्वावस्थां शिथिलतां हित्वा तन्तुरूपमवाप्नोति, तन्तुरूपात् तन्तुवायेन पटत्वेन निर्मिते सति पटत्वव्यवहारवान् भवति तथैव चित्तस्य अनवस्थासु अपि परिणामाः सम्भवन्ति। तदुच्यते अवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरापत्तिः परिणामः इति। यथा मृल्लक्षणस्य धर्मिणः पिण्डरूपधर्मपरित्यागेन घटरूपधर्मान्तरस्वीकारे धर्मपरिणामः इत्युच्यते। लक्षणपरिणामः यथा- तस्यैव घटस्य अनागताध्वपरित्यागेन

वर्तमानाध्वस्वीकारः। ततः तत्परित्यागेन च अतीताध्वपरिग्रहः इति भवति। अवस्थापरिणामः यथा - वर्तमानक्षण एव घटः प्रतिक्षणं नव, पुराणावस्थाभिः अन्यत्वमेति। अत्र यद्यपि सर्वोऽपि परिणामः परमार्थतः धर्मिणः एव। धर्मादीनां तत्त्वतः धर्मिस्वरूपत्वात्, तथापि व्यावहारिक-अवान्तररूपैः ईदृशोऽपि विभागः उच्यते। एतदन्यतमैः परिणामैः शून्यं क्षणमपि न किञ्चित् जडवस्तु अवतिष्ठते। यथा लौकिकानि वस्तूनि सर्वाण्यपि परिणामीनि भवन्ति, तथैव चित्तमपि परिणामधर्मी एव इति अत्र निरूप्यते तत्र धर्मः अस्य अस्तीति धर्मो निरुच्यते। सः किंलक्षणः? इत्यत्र अग्रे निरूप्यते **शान्तोदिताव्यपदेश्य-धर्मानुपाती धर्मी** इति। शान्ताः कृतव्यापाराः अतीताः। उदिताः जलाहरणव्यापाराविष्टाः वर्तमानाः। अव्यपदेश्याः शक्तिरूपेण मृदादिषु धर्मिषु स्थिताः अनागताः। ते हि सूक्ष्मतया धर्मिणः धर्मान्तराद्वा भेदेन व्यपदेष्टुं न शक्यन्ते, अत एव सर्वं कार्यं शक्तिरूपेण अव्यपदेश्यं कारणमात्रसम्भावितं इति सर्वं कारणं सर्वकार्यात्मकं भवति। दृश्यते हि दावानलदग्धवेत्रबीजात् कदलीखण्डोद्भवः! न हि तत्र असतः उद्भवः सम्भवति, अभिव्यञ्जकानां देशकालकर्मादीनां वैचित्र्यात् क्वचित् किञ्चिदेव उद्भवतीति लोके कार्यकारणं व्यवस्था। योगसिद्धानां देशादिप्रतिबन्धाभावात् सर्वस्मात् सर्वमुद्भवति, तान् एतान् शान्त, उदित, अव्यपदेश्यान् घटीयन्त्रवत् अनिशं आवर्तमानान् यः अनुपतति = अन्वेति सोऽनुपाती धर्मी। यथा मृत्सुवर्णादिः चूर्णपिण्ड घटरुचकाद्यन्वयी धर्मी इत्युच्यते। तत्र एकस्य धर्मिणः कथमनेके परिणामाः? इत्याशङ्कायां **क्रमान्यत्वं परिणामान्यत्वे हेतुः** इति सूत्रग्रथनद्वारा तां शङ्कां परिहरति। परिहारः एवं रूपः-

धर्माणामुक्तलक्षणानां यः क्रमः तस्य प्रतिक्षणं यत् अन्यत्वं परिदृश्यमानं तत् परिणामस्य उक्तलक्षणस्य अन्यत्वे नानाविधत्वे हेतुः लिङ्गं ज्ञापकं भवति। अस्यायमर्थः - योऽयं नियतः क्रमः मृच्चूर्णात् मृत्पिण्डः, ततः कपालानि, तेभ्यश्च घटः इत्येवं रूपः परिदृश्यमानः परिणामस्य अन्यत्वमावेदयति, तस्मिन्नेव धर्मिणि लक्षणपरिणामस्य, अवस्थापरिनियतेनैव क्रमेण प्रतिक्षणं परिणममानाः परिदृश्यन्ते। अतः सिद्धं क्रमान्यत्वात् परिणामान्यत्वम्। सर्वेषां चित्तादीनां परिणममानानां केचिद्धर्माः प्रत्यक्षेणैव उपलभ्यन्ते। यथा सुखादयः, संस्थानादयश्च। केचित्तु एकान्तेन अनुमानैकगम्याः - यथा धर्मसंस्काराः शक्तिप्रभृतयः। धर्मिणश्च भिन्नाभिन्नरूपतया सर्वत्रानुगमः। लोकेऽपि वयमनुदिनं पश्यामः जातः शिशुः लब्धपोषणः करचरणादिष्ववयवेषु परिणममानः तारुण्यावस्थां ततो यौवनावस्थां, ततः वृद्धावस्थायं च अवाप्नोति। इमे सर्वेऽपि परिणामाः धर्मिणि तस्मिन् कालान्तरावस्थायिनः सम्पद्यन्ते। धर्मिणि अन्यत्वं नानयन्ति। एकः एव धर्मी धर्मान्तरैः विभिन्नाकारतां भजते इति यथा लोके तदैव शास्त्रेऽपि चित्तस्य परिणामाः इत्थं व्याख्यायन्ते।

(अनुवर्तते.....)

**भारतवाणी**

**कालः पचति भूतानि कालः संहरते प्रजाः।**
**निर्दहन्तं प्रजाः कालं कालः शमयते पुनः।। १.१.१८८**

காலம் உயிர்களை உற்பத்தி செய்கிறது. காலம் உயிர்களை ஒடுக்குகிறது. உயிர்களை எரிக்கின்ற காலத்தை காலமே அடக்குகிறது.

# कलिकल्मषघ्नं श्रीकृष्णचरितम् - ६

## (वसुदेवचनेन देवक्याः वधोद्योगात्कंसस्य निवृत्तिः, देवकीपुत्राणां कंसकर्तृको वधश्च)

**Dr. M. VINOTH**
French Institute of Pondicherry,

मोदप्रमोदकरोऽयं विषयः यदस्य धनुर्मासस्य सन्निकायां भगवतोऽनुग्रहेण श्रीकृष्णावतारस्यैव वर्णनं प्रारभते। भगवतः वचनमत्र स्मर्तव्यं -

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम्।**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ।।**

(श्रीमद्भगवद्गीता १०.३५) इति।

एवं द्रविडदेशे प्रसिद्धत्वेन गीयामानं **तिरुप्पावै** इत्यभिधीयमानं द्रविडवेदमपि अस्मिन्नेव मासे विशेषरूपेण गीयते। तेन सह व्रतमप्यनुष्ठीयते इति सांप्रदायिकाः। इदं हि **आळ्वार्गळ्** (ஆழ்வார்கள்) इत्यभिधीयमानेषु द्वादशाचार्येषु अन्यतमस्य श्रीविष्णुचित्ताख्यस्य पुत्र्या श्रीगोदया (इयमपि आळ्वार् इति ख्याता) गीतम् अनुष्ठितञ्चेति सर्वविदितमेव। कथनस्यास्य अयमभिप्रायः यद्वयमपि नायिकाभावं संप्राप्य भगवन्तं श्रीकृष्णं नायकं कृत्वा तस्योपरि निरतशियप्रेम संस्थाप्य तस्य चरणारविन्दं प्राप्तुं यतामहे-

### तृतीयाध्यायस्य प्रारम्भः - श्रीकृष्णावतारघट्टः

अथ अस्मिन् तृतीयाध्याये प्रथमश्लोकादारभ्य अष्टमश्लोक-पर्यन्तं जायमानस्य भगवतः श्रीकृष्णस्य अवतारं प्रस्तौति भगवान् व्यासः। यदा सर्वैः गुणैरुपेतः यस्माच्च परमशोभनः जातः तादृशः कालो बभूव तदा भगवतः कृष्णस्य अवतारो बभूव इति वर्णयति। तत्र कालस्य परमशोभनत्वविषये विवृणोति - यस्मिन् नक्षत्रे अजात्

परमपुरुषात् प्रजापतेः जन्म बभूव यस्मिंश्च ग्रहाः सूर्यादयः तारकाश्च शान्ताः भवन्ति तस्मिन् रोहिणीनक्षत्रे, यदा दिशः प्रसन्नाः बभूवुः, यदा आकाशश्च निर्मलानां नक्षत्राणां गणैः पूरितो बभूव, यदा वसुधातले ग्रामव्रजादयः मङ्गलभूयिष्ठाः बभूवुः, यदा नद्यः प्रसन्नसलिलाः बभूवुः, यदा ह्रदाश्च जलरुहश्रियो बभूवुः, यदा वनपङ्क्तयः पक्षीणां भृङ्गानाञ्च सङ्गानां सन्नादैः पूरिताः बभूवुः, यदा धूलिरहितः सुगन्धिः सुखस्पर्शश्च वायुः प्रससार, यदा द्विजातीनां त्रैवर्णिकानां पूर्वं शान्ता अग्नयः ज्वलिताः बभूवुः, यदा असुरद्रुहां देवानां साधूनाञ्च मनांसि प्रसन्नानि आसन्, यदा जायमानम् अजनं पुरस्कृत्य दिवि दुन्दुभयो दध्वनुः, यदा किन्नरगन्धर्वाः सिद्धचारणाश्च तुष्टुवुः, यदा विद्याधर्यश्च अप्सरोभिः समं ननृतुः, यदा श्रीकृष्णे जायमाने सति अर्धरात्रे मेघाः मन्दं मन्दं सागरम् अनुसृत्य जगर्जुः तदा (पूर्वोक्तानि सर्वाण्यपि शुभसूचकानि चिह्नानि युगपदभवन्निति ज्ञेयम्) देवतांशतुल्यायां देवक्यां सर्वेषां जन्तूनां ज्ञानशक्तिगुणानाम् आश्रयः भगवान् विष्णुः आविर्बभूव। अत्र उपमां दर्शयति यथा प्राच्यां दिशि षोडशकलापरिपूर्णः चन्द्र आविर्बभूव तथेति। तदा जनार्दने जायमाने सति मुनयः समन्ततः पुष्पाणि मुमुचुः।

तमद्भुतं बालकं वसुदेव ऐक्षत। कीदृशं बालम् ऐक्षत स वसुदेव इति पृष्टे - अद्भुतम्, अम्बुजेक्षणं, चतुर्भुजं, शङ्खगदाद्युदायुधम्, गलेन शोभते सः कौस्तुभः यस्मिन् तादृशं गलशोभिकौस्तुभं, श्रीवत्सः लक्ष्म चिह्नं यस्य, तादृशं श्रीवत्सलक्ष्माणं, पीताम्बरं, सान्द्रनीलाम्बुदस्य (पुष्पविशेषः) इव सौन्दर्यं यस्य तादृशं सान्द्रपयोदसौभगं, महार्हाणि वैदूर्यादिरत्नानि यस्मिन् तस्य किरीटस्य तथा कुण्डलयोश्च कान्त्या परिष्वक्ताः सहस्रकुन्तलाः यस्य, तादृशं, श्लाघ्यैः काञ्च्यादिभिश्च

विरोचमानं चाद्भुतं बालकं वसुदेव ऐक्षत। कृष्णावतारोत्सवसंभ्रमः यस्य तादृशः सः वसुदेवः तं हरिं निजसुतं (श्रीकृष्णं) विलोक्य, विस्मयेन विकसिते नयने यस्य तादृशस्सन् महता मोदेन द्विजेभ्यो गवामयुतं दास्यामि इति कंसेन निगृहीतत्वात् दानासंभवान्मनसा सङ्कल्पितवान्। अथ किमभवदिति चेत् - स्वकान्त्या सूतिकागृहं विरोचयन्तं कुमारं परमपुरुषम् अवधार्य, कृताञ्जलिस्सन्, कंसाद् गतभीस्सन् सः वसुदेवः भगवतः प्रभावं जानन् तं तुष्टाव। तस्य च स्तवनमेवम् आरभते -

**विदितोऽसि भवान् साक्षात्पुरुषः प्रकृतेः परः।**
**केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक्।।**

(श्रीमद्भागवतम्, १०.३.१३) इति।

इत आरभ्य दशभिः पद्यैः भगवन्तं तुष्टाव वसुदेवः। स्तवनप्रकारं सङ्ग्रहेण उच्यते - प्रकृतेः परत्वेन, केवलज्ञानानन्दस्वरूपत्वेन, सर्वबुद्धिदृक्त्वेन च विदितोऽसि भवान्। तादृश एव त्वम् आदौ स्वमायया इदं सत्त्वरजस्तमोगुणात्मकं जगत् सृष्ट्वा तदनु त्वम् अप्रविष्टस्सन्नपि प्रविष्ट इव लक्ष्यसे। अत एव खलु श्रूयते श्रुतिः - **तत्सृष्ट्वा तदेवाऽनुप्राविशत्** (तैत्तिरीयोपनिषत् २.६) इति। यथा महदहङ्कारादयो पृथग्भूताः सन्तोऽपि विशिष्टकार्यसमर्थाः न भवन्ति इत्यस्मात् कारणात् षोडशविकारैः सह सन्निपत्य ब्रह्माण्डं जनयन्ति। एवं ब्रह्माण्डम् उत्पाद्य प्रविष्टा इव दृश्यन्ते परं पूर्वमेव विद्यमानत्वान्न पुनः प्रविष्टाः। तथा भवानपि समस्तस्यापि जगतः उत्पत्तेः प्रागेव तत्कारणतया अवस्थितस्सन्नथ तदनुप्रविष्टोऽपि अप्रविष्ट इव विराजते इति।।

(अनुवर्तते.....)

# त्रिविधमौषधम् - १६

Sri.S.BALASUBRAMANIAN
Ms. B. RENGA PADMINI
IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

**विषयोनिः**

**जङ्गमस्थावरायां तद्योनौ ब्रह्मा न्ययोजयत्।**
**तदम्बुसंभवं तस्माद्द्विविधं पावकोपनम्।। (च.चि.२३)**

तथापि च उक्तम्-

**स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते।**
**दशाधिष्ठानमाद्यं तु द्वितीयं षोडशाश्रयम्।। (सु.क.२)**

द्विविधे विषाधिष्ठाने भवतः - स्थावरं जाङ्गमञ्चेति।

स्थावरविषाधिष्ठानानि दश भवन्ति।

**मूलं पत्रं पलं पुष्पं त्वक् क्षीरं सार एव च।**
**निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः।।** (सु.क.२)

मूलादिषु कन्दविषे एव अधिकं विषत्वम् अस्ति। पञ्चपञ्चाशदेव स्थावरविषाणां संग्रहः। ततः जङ्गमाधिष्ठानानि -

**तत्र दृष्टि-निःश्वास-दंष्ट्रा-नख-मूत्र-पुरीष-शुक्र-लाला-आर्तव-मुखसंदंश-विशर्धित-तुण्ड-अस्थि-पित्त-शूक-शवनानि इति।** (सु.क.३/२)

दृष्टिनिश्वासयोः विषाः दिव्याः सर्पाः। दंष्ट्रविषाः मार्जाराश्ववानर-मकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पादादि।

चिपिटपिच्चिटककषायवासिकसर्षपकतोटकवर्चःकीटादयः

शकृन्मूत्रविषाः मूषिकाः शुक्रविषाः।

लूताः लालामूत्रपुरीषमुखसंदंशनखशुक्रार्तवविषाः।

वृश्चिकास्संदंशविषाः

शतदारुकामदकयादयः मुखसंदंशनखशुक्रार्तवविषाः

मत्स्याश्च पित्तविषाः

भ्रमराः शूकतुण्डविषाः

कीटसर्पदेहा गतासवाः शवाविषाः।

इति सामान्येन जाङ्गमविषाणि उक्तानि।

इत्थं सामान्येन वयम् अगदतन्त्रोक्तविषयान् समासेन उक्तवन्तः। मन्त्रस्य मुख्यत्वं विषचिकित्सायामिति विषये इत उत्तरं पश्यामः।

**विषचिकित्सा**

विषचिकित्सायां मन्त्रः प्रधानः भवति। तस्मात् कारणात् चरकाचार्याः चतुर्विंशतिः विषोपक्रमेषु आदौ एव मन्त्रः उच्यते। उक्तं हि चरके -

**मन्त्रारिष्टोत्कर्तननिष्पीडनचूषणाग्निपरिषेकाः।**
**अवगाहरक्तमोक्षणवमनविरेकोपधानानि।।**
**हृदयावरणाञ्जननस्यधूमलेहौषधप्रशमनानि।**
**प्रतिसारणं प्रतिविषं संज्ञासंस्थापनं लेपः।।**
**मृतसञ्जीवनमेव च विंशतिरेते चतुर्भिरधिकाः।**

(च.चि.२३/३५-३७)

अस्मिन्नेव श्लोके मन्त्रः आदौ उक्तः, प्राधान्यात्। किमर्थं प्रधानः इति सुश्रुताचार्याः उक्तवन्तः।

(अनुवर्तते.....)

# शास्त्रं ज्योतिः प्रकाशार्थम् - १३

**Ms. DHWANI J.**

IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

नमः संस्कृतसेवकेभ्यः ! गतमासे Insomnia, Narcolepsy, Klein-Levin Syndrome (KLS), Exploding Head Syndrome (EHS), Fatal Familial Insomnia इति कानिचन व्याधिनामानि दृष्टानि। सर्व एते रोगाः निद्रासंबद्धाः सन्ति। एवंविधैः रोगैः अद्य भूयोऽपि जनाः पीडिताः विध्वस्तचित्ताश्च सन्तः समाधानमलभमानाः इतस्ततः बम्भ्रमन्ते। ननु संवत्सरेऽस्मिन् कृतेन केनचित् सर्वेक्षणेन (thestatesman.com) इदं ज्ञातं यत् भारतजनपदे 16% जनाः Insomnia (निद्रानाशः) इति व्याधिना पीडिताः सन्ति। तथा च 80% जनाः स्वकार्यक्षेत्रे सप्ताहे १-३ दिनानि कार्यवेलायां निद्रागृहीताः सन्तीति। सङ्ख्येयं सत्यमेव महती वर्तते। तत्रादौ पश्यामः किं नाम Insomnia इति। उच्यते - Insomnia is the perception or complaint of inadequate or poor-quality sleep. सरलभाषया उच्यते चेत् - निद्रानाशः एव इन्सोम्निया इत्युच्यते। पुनरत्र आयुर्वेदोक्तीः पश्यामः। उच्यते हि चरकसंहितायाम् -

**कायस्य शिरसश्चैव विरेकश्छर्दनं भयम्।**
**चिन्ता क्रोधस्तथा धूमो व्यायामो रक्तमोक्षणम्।।**
**उपवासोऽसुखा शय्या सत्त्वौदार्यं तमोजयः।**
**निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम्।।**
**एत एव च विज्ञेया निद्रानाशस्य हेतवः।**

(चरकसंहिता - सूत्रस्थानम् - २१.५५-५७)

तत्र चिकित्सां विहाय व्यक्तिगतप्रसक्तिं ये हेतवः यान्ति, तान् पश्यामः। चिन्ता क्रोधः इति भावद्वयमप्येतत् सर्वशः व्यक्तिगतमेव। अपि च चिन्ता तु अतिनिद्रायाः चिकित्सा उक्ता, तथा च स्थौल्यस्य। अनेनैव अनुमीयते यत् चिन्ता तु अतीव शरीरकर्शनी भवतीति। अतः चिन्ता सर्वथा मिता एव भवेत्। अपि स्मर्य्यतेऽत्रेदं सुभाषितम्-

**चिन्तायाश्च चितायाश्च बिन्दुमात्रं विशेषता।**
**चिता दहति निर्जीवं चिन्ता दहति जीवितम्।।**

सत्यमेव खलु। आयुर्वेदेऽपि बहुत्र चिन्तायाः रोगकारित्वं दर्शितं भवति।

क्रोधस्तु सर्वदा हेयः एव। **क्रोधाद्भवति संमोहः** इत्यादि-श्लोकस्तु लोकप्रसिद्धः एव। तदतिरिच्य वक्तुमीहे - आयुर्वेदे केचन **वेगाः** उच्यन्ते। तत्र शारीरिकाः केचित् मूत्रपुरीषादीनां, मानसिकाश्च केचित् लोभशोकादीनां वेगाः। त एते वेगाः धारणीय-अधारणीयत्वेन द्विधा भिद्यन्ते। तत्र क्रोधः धारणीयेषु अन्यतमः गण्यते। उच्यते -

**इमांस्तु धारयेद्वेगान् हितार्थी प्रेत्य चेह च।**
**साहसानामशस्तानां मनोवाक्कायकर्मणाम्।।**
**लोभशोकभयक्रोधमानवेगान् विधारयेत्।**
**नैर्लज्ज्येर्ष्यातिरागाणामभिध्यायाश्च बुद्धिमान्।।**

(चरकसंहिता - सूत्रस्थानम् - ७.२६-२७)

प्रेत्य चेह इति परलोके इहलोके च यः हितार्थी हितकामी भवति सः एतान् वेगान् सदा धारयेदिति। क्रोधनिन्दा तु सर्वत्र शास्त्रेषु बहुधा कृता एव इति विषयोऽयं न इतोऽप्यत्र विस्तीर्यते।? उपवासः इति। असुखा शय्या। सत्त्वौदार्यं तमोजयः।

(अनुवर्तते.....)

# संस्कारः ஸம்ஸ்காரம்

## (श्रीमहास्वामिनां वचःसमुद्धरणपूर्वकम्)

**Dr. S. THIAGARAJAN**
Department of Oriental Studies & Research,
SASTRA - Deemed to be Unviersity, Thanjavur

जन्म प्राप्तवतः प्रत्येकस्य मनुष्यस्य संस्काराः विहिताः सन्ति। तेनैव संस्कारेण नराः पूताः भवन्तीति दृढास्तिक्यम् अस्ति अस्माकं धर्मेषु। तत्र विषये परमाचार्याणां वचः एवं भवति-

सामान्यतः संस्कारः इत्यस्य सं - सम्यक्, कारः - करणम्, कञ्चन विषयं सम्यक् करणमेव संस्कारः इति सामान्यार्थः। एवमेव कञ्चन जीवात्मानं परमात्मनि लयं प्राप्तुं संयक् शुद्धीकरणसंस्कारान् एव धर्मशास्त्राणि अस्मभ्यं विशेषतः बोधयन्ति। कल्पसूत्रोक्त्यनुसारं कश्चन जीवः अस्यां जीवयात्रायां (एकस्मिन् जन्मनि) करणीयान् चत्वारिंशत् संस्कारान् विस्तृततया धर्मशास्त्रेभ्यः जानीमः। के च ते चत्वारिंशत् संस्काराः इति ज्ञास्यामः।

अस्मिन् लौकिकजीवने सुखम्, दुःखमिति द्वन्द्वमिदं परम्परया (एकस्यानन्तरमपरं - दुःखस्यानन्तरं सुखं, सुखस्यानन्तरं दुःखमिति) अनुभूयते। केभ्यश्चित् सुखम् अधिकं भवति, केभ्यश्चित् दुःखमधिकं भवति। स्वस्य मनः नियन्त्रणे समानीय, यावत्सु अपि दुःखेषु प्रसन्नवदनाः भवन्तीति तु यत्र क्वापि केचन एव भवन्ति। आनन्दाय बहुवो विषयाः भवन्ति चेदपि तत्र तृप्तिं विना खेदमनुभवामः। परिपूर्णता नास्ति इत्युक्ते दुःखमस्ति इत्येवार्थः।

सर्वदा आनन्देन भवितव्यमित्येव सर्वेऽपि जीवराशयः

इच्छन्ति। सर्वदा आनन्दमये द्वे स्थाने भवतः। देवलोकः अथवा स्वर्गः इति एकं स्थानम्। अन्यत्तु आत्मज्ञानम्। आत्मा आनन्दस्वरूपः। आनन्दं ब्रह्म इति उपनिषद्वचनम्। तद्ब्रह्म एव आत्मा। इत्थं ज्ञानं प्राप्नुमः चेत् शाश्वतानन्दः एव। किन्तु अयमानन्दः इन्द्रियैः मनसा वा अनुभूयमानः आनन्दः नास्ति। तत्तु इन्द्रियं, मनः इति सर्वमतिरिच्य, **नाहं शरीरम्, नाहं बुद्धिः, नाहं चित्तमि**ति सर्वोत्कृष्टा स्थितिः।

मनसेन्द्रियैश्च सदानुभूयमानः आनन्दः देवलोके एव भवति। गानम्, नर्तनं, गन्धर्वगानं, रम्भा-मेनकानर्तनं, कल्पकवृक्षः, कामधेनुः, नन्दनवनमिति सर्वसंयुता उल्लसिता भूमिः सा। तत्र सदा आनन्दः भवति। किन्तु आत्मज्ञानिनां मते आनन्दस्य अस्यानन्दस्य च व्यत्यासः भवति। देवलोके सदा आनन्दः भवति, परन्तु तत्र गच्छतः नास्ति। यतः देवलोके अस्य शाश्वतवासः न लभ्यते। अधिकपुण्यफलेन सज्जन्मनः प्राप्तेः प्राक् किञ्चित्कालमस्य देवलोकवासः भवति, परन्तु देवलोके एव तस्य निरन्तरवासः न भवति। पुण्यस्य फलं अयमनुभूतवानिति निश्चयात् परं इमं ईश्वरः भूलोकं प्रति प्रेषयति। मनुष्याः भूत्वा अत्यधिकं पुण्यं कृत्वा देवलोके वस्तव्याः देवाः अभवन्निति केषांचन पुराणकथाः अपि भवन्त्येव। किन्तु देवानामपि देवलोके निरन्तरवासः नास्तीति तानि पुराणान्येव कथयन्ति। देवान् शूरपद्मः संपीड्य दूरीकृतवान्। महिषासुरः संपीडयति स्म, इन्द्रादयः देवाः भूलोकमागत्य भ्रान्ताः जाताः इत्येवमादयाः अपि पुराणेषु वर्तन्ते। अतः देवलोके सदा भवितुं शक्यते चेत् शास्वतः आनन्दः भवति इति कल्पनया वक्तुमेव शक्नुमः, परन्तु तथा न कोऽपि

आसीत्, न वा भवितुं शक्यते इत्येव वक्तव्यम्।।

इन्द्रियैः आनन्दः इत्युक्ते बहिर्विद्यमानानामर्थानामनुभोगेनैव तत्सिद्धिः। बहिः विद्यमानान् अर्थान् कथं सर्वदा अस्मत्सकाशे स्थापयितुं शक्यते? तत् हस्तच्युतोऽपि भवितुं शक्यते। कामधेनुः, कल्पतरुः, ऐरावतः, इन्द्राणी चापि इन्द्रात् च्युताः, तेन एकाकिना परितप्ताः सन्दर्भाः अपि भवन्ति। अतः बहिर्विद्यमानान् आश्रित्य अनुभूयमानं देवलोक-इन्द्रियसौख्यं वस्तुतः शाश्वतं नास्त्येव। बहिः अन्तः इति किमपि विना आत्मनि एव स्थितप्रज्ञः इति (गीतायां) भगवतः वचनानुगुणं यः संलग्नः भवति तस्यैव सदानन्दः भवति। इन्द्रस्य आनन्दोऽपि अस्मिन् आत्मानन्दमहासमुद्रस्य कुशाग्रबिन्दुरेवेति वदन्ति आचार्याः ।

(अनुवर्तते.....)

## भारतवाणी

**येषां दिव्यानि कर्माणि विक्रमस्त्याग एव च।**
**माहात्म्यमपि चास्तिक्यं सत्यता शौचमार्जवम्।। १.१.१८१**
**विद्वद्भिः कथ्यते लोके पुराणैः कविसत्तमैः।**
**सर्वर्द्धिगुणसंपन्नास्ते चापि निधनं गताः।। १.१.१८२**

எவர்களுடைய இறைபணி, மறம், த்யாகம், பெருமை, நம்பிக்கை, வாய்மை, தூய்மை, நேர்மை இவைகள் முற்காலத்திய அறிவாளிகளான கவிகளால் போற்றப்பட்டிருக்கின்றனவோ அத்தகைய எல்லா விதமான செழுமை மற்றும் நற்குணங்கள் நிறைந்த அவர்களும் முடிவை அடைந்திருக்கிறார்கள்.

# महाभारते मोक्षधर्मपर्वणि वेदान्तविचारः

## (मोक्षधर्मसाधनानि)

**Sri. K. KALIVARADHAN**
Research Scholar, SCSVMV, Kanchipuram

**इन्द्रियनिग्रहणम्**

मनोबुद्ध्यहंकाराश्च, एते त्रयो स्वयोनिजाः। इदं जगत् बुद्धिमात्रकल्पितम् इति यो जानाति स न मुह्यति । यथा विषयाणां सत्वाभावेऽपि रज्जूरगवदविद्यया प्रकाश उपपद्यते इति सर्वं ज्ञातम्। एवञ्च आत्मानम् इन्द्रियैः द्रष्टुं न शक्यते यथा हि काम्यमानविषयगोचरैः दोषयुक्तैः आत्मानं स्वरूपेण द्रष्टुमशक्यः । कामक्रोधमत्सरादिभिः विनिर्मुक्तचेतसा इन्द्रियनिग्रहेण अज्ञानमपगममात्रेणैव आत्मसाक्षात्कारं प्राप्नोति।

**चित्तप्रसादेन यतिर्जहातीह शुभाशुभम् ।**
**प्रसन्नमात्मनि स्थित्वा सुखमत्यन्तमश्नुते ।। (२४६.१०)**
**बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनाऽऽत्मनि ।**
**यदा विकुरुते भावं तदा भवति सा मनः ।। (२४८.३)**
**अनादिनिधनो ह्यात्मा तं बुद्ध्वा विचरेन्नरः ।**
**अक्रुध्यन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ।। (२४९.५)**
**इन्द्रियाणि प्रमाथीनि बुद्ध्या संयम्य यत्नतः ।**
**सर्वतो निष्पतिष्णूनि पिता बालानिवात्मजान् ।। (२५०.३)**

कामक्रोधादीनां स्वरूपं निवर्तनं च -

**हृदि कामद्रुमश्चित्रो मोहसंचयसम्भवः ।**
**क्रोधमानमहास्कन्धो विधित्सापरिषेचनः ।। (२५४.१)**
**तस्य चाज्ञानमाधारः प्रमादः परिषेचनम् ।**

**सोऽभ्यसूयापलाशो हि पुरा दुष्कृतसारवान् ।। (२५४.२)**
**सम्मोहचिन्ताविटपः शोकशाखो भयाङ्कुरः ।**
**मोहनीभिः पिपासाभिर्लताभिरनुवेष्टितः ।। (२५४.३)**

व्यासः विवृणोति एवम् - एकैकस्य हृदये आशा इति वृक्षः अस्ति। तस्य बीजं मोहः । तस्य स्कन्धो क्रोधः मानम् च । तस्य आधारः अज्ञानं प्रमादः सलिलम् । असूया पलाशः । संमोहः चिन्ता च तस्य विटपः । शोको तस्य शाखा । भयं अङ्कुरः । पिपासा लता। महर्षिव्यासः वदति **आयसैः संयुताः सुलुब्धाः तस्य फलमीप्सिताः तं वृक्षं परिवेष्ट्य उपासते** इति । कामक्रोधवृक्षस्य स्वरूपं तं अर्तत्राणाय संरोहत्य कृतप्रज्ञः तान् सर्वान् उक्त्वा व्यासमहर्षिः तस्मात् कथं निवर्तनं भवति इत्यपि विशदयति एवम् :

**तस्यानुगतमूलस्य मूलमुद्भ्रियते बलात् ।**
**योगप्रसादात्कृतिना साम्येन परमासिना ।। (२५४.७)**
**एवं यो वेद कामस्य केवलस्य विवर्तनम् ।**
**बन्धं वै कामशास्त्रस्य स दुःखान्यतिवर्तते ।। (२५४.८)**

ये मानवाः कामस्य दुःखभूतातिकठोरविपाकदारुणं जानाति ते योगप्रसादात् समाहृतचित्तया धर्मज्ञानेन च तं वृक्षमूलम् छित्वा दुःखस्य निवर्तनम् आप्नुवन्ति ।

**धर्मम् अहिंसा सत्यञ्च**

युधिष्ठिरः यदा भीष्मं प्रति धर्मप्रामाण्याक्षेपान् पृच्छति तदा भीष्मः तुलाधारेण जाजल्ये प्रदत्तधर्मरहस्योपदेशान् अनुस्मृत्य प्रतिवदतिः

**वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।**
**सर्वभूतहितं मैत्रं पुराणं यं जनाविदुः ।। (२६२.५)**

**अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।**
**या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ।। (२६२.६)**
**तपोभिर्यज्ञदानैश्च वाक्यैः प्रज्ञाश्रितैस्तथा ।**
**प्राप्यभयदानस्य यद् यत् फलमिहाश्नुते ।। (२६२.२८)**

मैत्रभावादभिव्यक्तसर्वभूतहितं यं धर्मं जनैः पुराणमिति ज्ञातं तदनादि शाश्वतञ्च । इदम् अस्य धर्मस्याधारं अद्रोहः अथवा अल्पद्रोहः। मम जीवनं तावद्धर्मवृत्तिरूपेणैव । यत् फलं मानवः इह जन्मनि तपोभिः यज्ञदानैः वाक्यैः च प्राप्नोति तान् सर्वान् अभयदानात् प्रज्ञाश्रितैः प्राप्तुम् शक्यते।

**मोक्षोपायः - क्षमा, कामक्रोधादीनां विवर्जनं, सत्वसंसेवनम्**

यदा युधिष्टिरः सूक्ष्मतरमोक्षोपायान् पृच्छति तदा भीष्मेन एवं प्रतिपादितम् :-

**क्षमया क्रोधमुच्छिन्द्यात् कामं संकल्पवर्जनात् ।**
**सत्वसंसेवनात् धीरो निद्रां च च्छेत्तुमर्हति ।।**
**(२७४.५)**

(अनुवर्तते.....)

**भारतवाणी**

**अतीतानागता भावा ये च वर्तन्ति सांप्रतम्।**
**तान्कालनिर्मितान्बुद्ध्वा न संज्ञां हातुमर्हसि।। १.१.१९०**

நிகழ்ந்ததும் நிகழப்போவதும் நிகழ்வதுமான எல்லாம் காலத்தாலானது என்பதை அறிந்து நீ அறிவை இழக்கக் கூடாது..

# The Self as the highest aim according to Vedāntasiddhāntamuktāvali of Prakāśānanda

**Sri. SRIPATHY**
Research Scholar, Dept. of Sanskrit & IC, SCSVMV

Nobody desires pain; then how it can be an object of desire for attainment through volition. It may be true; but on the other hand, they desire the absence of pain for which pain the pratiyogi, as the absence should be presupposed by a thing. In this manner, the pain, which is treated as anupādeya since it cannot be attained through volition (svakṛti-sādhyatva-viraha), becoming upādeya also. The opponent is in a position to prove Self as anupādeya and pleasure and absence of pain are the highest human goal. But, here the pleasure and absence of pain are themselves becoming anupādeya and thus he slips from his own philosophy. The fourth one i.e. being different from pleasure and absence of pain, as qualified above in the previous alternative (etadviśeṣita-sukhaduḥkhābhāva-itaratvam) cannot be a proper definition for anupādeyatva. Because, as the third alternative which is the qualification for the fourth alternative was held disproved, the fourth alternative which is based on the third cannot be logical. The highest human aim is not obtaining pleasure but knowing his own nature as

pleasure itself. The fifth alternative is also not logical. Because the hetu and sādhya is not in line with one another. The Self is not the highest aim (anupādeya, the sādhya) though it is different from pleasure and the absence of pain (sukhaduḥkhābhāveitaratvāt, the hetu). In vedanta it is said that though the Self is beyond pleasure and absence of pain, in respect of its bliss aspect it can be the highest aim. Hence, here the sādhya cannot be justified by this much of hetu. Nor the sixth definition is tenable. Since all the above five alternatives are ruled out, the only remaining option is identifying the Self with the pain and its instruments. This is completely not reasonable as the non-self such as pain and its instruments can not be compared with the Self in any manner.

Since all the six definitions for the term anupādeyatva i.e. the quality of not being suitable to consider it as the highest aim are ruled out and pleasure and absence of pain as the highest human aim is also negated, then why can't the Self be considered as a highest aim in the aspect its ever blissful nature ? But the opponent Naiyāyika who is reluctant to accept this urges that if the Self is all-pervasive and does not have the qualities of anātman, then the all-pervasive nature (sarvātmat-vam) cannot be attributed to the Self.

Because the ether which is all-pervasive is termed as non-eternal in advaita. So, the Self which is all-pervasive like ether must be non-eternal. This is not correct. The meaning of the all-pervasive nature of the self is misunderstood by the opponent. All-pervasiveness means the substrate of everything and the substrate can give existence to the objects it pervades and makes it appear in the consciousness (sattāsphūrti-pradatvam). Considering the Self as non-eternal by mere identification of Self with non-eternal ether as stated above will destroy the real nature of Self as an eternal entity. Hence, the definition of anupādeyatva is incomplete and has no applicability in respect of the Self.

The opponent continues that the thing which is upādeya i.e. the thing which is fit to be considered as the highest aim should be ever independent regarding the other things (itarānupasarjanatvam) and cannot be a dependent to other things. On the other and the Self is the positive entity (bhāvarūpa) for vedantins and because of this character, it cannot be the absence of pain. So, the Self cannot be the highest aim (anupādeya). Henceforth, bliss and absence of pain must be ever independent and must be the highest aim (upādeya). The opponent continues that in order

to accept the Self as free from pain, it is better to accept it as a void (śūnya) and in this manner considering it as free from pain, it can be the highest aim. The above objection is not tenable. Because, since the void (śūnya) cannot be cognised like an object of perception. Also, it cannot be Self as it lacks the character of knowledge. Therefore, śūnya cannot be the cognizer and the object of cognition does not depend on śūnya for its revelation. Therefore, śūnya is not the highest aim and there should be a positive entity which is of the nature of consciousness to be considered as the highest aim. Moreover, superimposition of non-self on the Self and also the false surmisal of the entire phenomenal world is not possible on a śūnya. śūnya cannot project the world as existent and the result must also be śūnya; but on the other hand, since the world is cognized, then there must be a positive substratum for this false superimposition and it is nothing but the Self which has the character of the absence of pain.

The opponent raises objection is another manner based on the above. It is difficult to consider the nature of Self as pleasure. Because, pleasure is the result that can be attained by pleasurable objects

like garland, etc. The man who is in need of pleasure clearly approaches such objects which are capable of giving him pleasure. If the Self is pleasurable, then it should be caused and we will be in a position to search for a cause like a garland, etc. Therefore, attainment of pleasure leads a man to search for worldly things only and not the Self. Nor it can be said that like the garland and its effect happiness which is produced, the effect pleasure is produced automatically when a man approaches Self. Then a question may come to mind that the relationship between the Self and pleasure should be in the nature of samavāya. But this is not as such, because samavāya is not produced and eternal for Naiyāyikas. Also, from the common statement "may pleasure be mine and may pain cease for me", it is very clear that pleasure and absence of pain is the highest aim and nobody evince interest that "may Self be mine". Therefore, in any manner, the Self is anupādeya i.e. not being suitable to consider it as a puruṣārtha. If the Self is the puruṣārtha, then the desire to die in holy prayāga becomes futile. Even scriptures prescribe this to attain the desired objects or pleasure.[1] Thus, pleasure and absence of pain is upādeya and not the Self.

[To be continued.....]

# विश्वामित्रचाण्डालयोः कथा

**Dr. SUJATHA RAGHAVAN**
Department of Sanskrit, SCSVMV, Kanchipuram

त्रेताद्वापरयुगयोः सन्धिकाल आसीत्। देववशात्सम्पूर्णेऽपि भूमण्डले जलवृष्टिः न जाता। द्वादशवर्षपर्यन्तं समस्तेऽपि भूप्रदेशे च जलवर्षणस्याभावेन घोरं दुर्भिक्षमापतितम्। गवां रक्षा दुर्लभा बभूव। सर्वत्र आपणविपण्यशून्यानि नगराणि दृष्टिपथम् आयान्ति स्म। क्षुधार्तानां जनानाम् आर्तनादः सर्वत्र व्याप्तः आसीत्। नगराणि प्रायः जनशून्यानि। ग्रामाः ग्रामस्थगृहस्य निर्जनाः तीक्ष्णनिदाघेन दग्धप्रायाः बभूवुः। क्षुधार्ताः प्राणिनः सम्मुखं आगतम् प्राणिनं वीक्ष्य स्वक्षुधानिवृत्त्यर्थं तस्योपरि आघातं कुर्वन्ति स्म। एतादृशे सुदीर्घे दुर्भिक्षसमये धर्मस्य तिरोधानात् क्षुधार्ताः जनाः सम्मुखमागतं जनमपि खादन्ति स्म।

एषु दिवसेषु बुद्धिमतामग्रगण्यो महर्षिः श्रीविश्वामित्रोपि क्षुधार्तः आश्रमं विहाय खाद्यं अन्विष्यन् चण्डालानां पक्कणं जगाम। तत्र कश्चित् चण्डालः भोजनाय मांसं ददौ। विश्वामित्रः तन्निराचकार। तदा सः चण्डालः कौशिकम् अवदत्। अनेन निषिद्धेन पापकर्मणा स्वात्मानं रक्षतु भवान् न कोऽपि दोषः इति। विश्वामित्रेण उक्तं त्वं धर्मोपदेशस्य विषये अधिकृतः पुरुषो नाऽसि ग्रहं जानामि कस्यां परिस्थित्यां किं करणीयमस्ति। इति।

तदनन्तरं वेदोक्तेन विधिना अग्निप्रज्वालनं कृत्वा तेन विश्वामित्रेण देवकर्म पितृकर्मादिकं विधाय इन्द्रादिदेवानाम् आवाहनं कृतम्। यदा तेन ऋषिणा विधिपूर्वकं तेषां देवानां कृते तस्य हव्यान्नस्य पृथक्पृथगंशा यज्ञाग्नौ अर्पिताः तदा सन्दुष्टः इन्द्रादिभिः

तत्क्षणमेव सर्वत्र भूमण्डले जलवृष्टिः कृता। अनेन कर्मणा तत्र समस्तप्रदेशे अन्नादयः औषधादयश्च समुत्पन्नः बभूवुः। भूभागे सर्वे प्राणिणः पुनः अन्नं इत्यादिकं संप्राप्य क्षुधानिवृत्ता रोगमुक्ताश्च संजाताः।

भगवान् विश्वामित्रोऽपि सुदीर्घकठोरतपश्चर्यायाः परिणामात् दग्धकल्मषः सन् अत्यद्भुतं सिद्धित्वं प्राप्तवान्। तेन द्विजश्रेष्ठेण तद् हवनं सम्प्राप्य तस्य हविष्यद्रव्यस्यास्वादनं विनैव देवान् पितृश्च संतोष्य तेषां अनुकम्पयैव पवित्रं भोजनं संप्राप्य स्वजीवनरक्षां चकार। शान्तिपर्वणि भीष्मपितामहेनाप्युक्तं -

**तस्मात् कौन्तेय विदुषा धर्माधर्मविनिश्चये।**
**बुद्धिमास्थाय लोकेऽस्मिन् वर्तितव्यं कृतात्मना।।**

इति। तस्मात् कौन्तेय कृतात्मना विदुषा अस्मिन् लोके धर्माधर्मविनिश्चये बुद्धिमास्थाय (विश्वामित्रवत्) वर्तितव्यम् इति।।

### भारतवाणी

**तपो न कल्कोऽध्ययनं न कल्कः**
**स्वाभाविको वेदविधिर्न कल्कः।**
**प्रसह्य वित्ताहरणं न कल्क**
**स्तान्येव भावोपहतानि कल्कः।। १.१.२१०**

தவம் செய்வது குற்றமாகாது. கற்பது குற்றமாகாது. இயல்புடைய மறைநெறியும் குற்றமாகாது. வன்முறையால் செல்வமடைதல் குற்றமாகாது. ஆனால் இவையே வேறுவிதமான உள்ளர்த்தத்துடன் செய்யப்பட்டால் குற்றமுடையவையாகின்றன.

# बालकथा - ४

(वृद्धपितामही चिरन्तनीति नामधेयवती बालान् कथयति)

(चित्रम् - सु.श्री.इन्दु, Intern, SJS Ayurveda College, Chennai)

बालकाः ! पशुपक्षिणः अपि अस्माकं जीविते पाठं बोधयन्ति। पश्यत काकान् स्वेन लब्धम् अन्नं सर्वान् आहूय सम्मिल्य भुञ्जन्ति। अतः लब्धं वस्तु सर्वैः बन्धुभिः मित्रै सह एव भोक्तव्यम्। केवलं स्वयमेव भोक्तुं यदि कश्चित् यतेत तर्हि वस्तु-नाशः अपयशः पापञ्च भवन्ति। श्रुण्वन्तु अत्र कथामेकां कथयामि।



पुरा द्रोणमुखमिति ग्रामः कश्चन आसीत्। तस्य पार्श्वे वनान्तरे सुमार्गः इति कश्चन ऋषिः स्वास्य आश्रमम् प्रत्यस्थापयत्। तत्र बहवः बालकाः विद्याम् अध्यैयत। द्रोणमुखग्रामात् बहवः जनाः स्वपुत्रान् पाठनाय गुरुकुलं प्रति प्रैषयन्। विद्यायाः अभ्यासस्य विघ्न-निवारणाय गुरुः मातापितृदर्शनं विहितेषु एव दिनेषु अकारयत्। तत्र गुरुकुले सुन्दः इति कश्चन छात्रः अपठत्। सः लोभेन पीडितः आसीत्। सर्वमपि वस्तु स्वकीयं मन्यमानः अन्येभ्यः न ददाति। तस्य मातापितृभ्यां दर्शनकाले दत्तं भक्ष्यादिकम् अन्येभ्यः अदत्वा स्वयमेव भोक्तुं

तस्य मतिः आसीत्।

किन्तु अन्ये छात्राः मातापितृभ्यां दत्तं भक्ष्यादिकम् अन्येभ्यः विभज्य दत्वा स्वयमपि अभुञ्जन्। सुन्दः केवलं अन्येभ्यः उपाददात्। किन्तु तस्य मातापितृभ्यां दत्तं अग्रेफलबीजं अपूपादिभक्ष्यं च एकस्मिन् वृक्षकोटरे अस्थापयत्। छात्राणाम् अभावे स्वयमेव भोक्तुं तस्य मतिः आसीत्।

एवं मासेभ्यः सः भक्ष्यादिकं विशाले कोटरे संस्थाप्य अरक्षत्। यदा सः भोक्तुं प्रायतत तदानीं छात्राणां ध्वनिं श्रुत्वा पुनः तत्रैव अस्थापयत्। एवं स्वयम् न भुञ्जन् अन्येभ्यः न ददानः भक्ष्यादिकं अपालयत्। एकस्मिन् दिने छात्राः सर्वे वनान्तरं प्रति अगच्छन्। तदानीं सुन्दः वृक्षस्य कोटरात् स्वस्य भक्ष्यादिकं स्वीकर्तुं अगच्छत्। तदानीं सः अवागच्छत् यदर्धं मूषिकादिभिः भुक्तम्, अर्धञ्च जीर्णं जातमिति। अन्ये छात्राः प्राप्तिकाले एव व्यभजन् इति हेतोः तेषु सख्यं तथा भक्ष्यलाभश्च अभूत्। सुन्दः स्वयमपि अभुक्त्वा अन्येभ्यः अपि अदत्वा सख्यमपि अनाशयत्। भक्ष्याणि अपि नष्टानि अभवन्। अनन्तरं सः सुन्दः मातापितृभ्यां दत्तं सर्वमपि अन्येभ्यः विभजनं कृत्वा स्वयमपि भुक्त्वा सन्तुष्टः अभवत्।

बालाः, अपि अश्रुणुवन् भवन्तः। दानम्, भोगः नाशः इति तिस्रः गतयः एव वस्तुनः। यः न ददाति न वा भुनक्ति, तस्य तृतीया गतिरेव भविष्यति। विभज्य भोजने सख्यं वर्धते। केवलभोजने सख्यं नश्यति। पापञ्च वर्धते। अतः भवन्तः सर्वेपि सर्वदा अन्येभ्यः विभज्य स्वयमपि भुक्त्वा सन्तुष्टाः भवन्तु।

# INTRODUCTION TO HINDU CONCEPT OF LAW

**Sri. T.S. SUDARSHAN**
Research Scholar, Dept. of Sanskrit & IC, SCSVMV

One of the Mimamsa principles is called the atidesh principle, and this was used by our ancient Jurists to solve the problem of the rights and duties of a dattak putra. What is this atidesa principle? To explain this it may be mentioned that the rules for performing certain Yagas are given in religious books called the Brahmanas, e.g. Shatapath Brahmana, Aitareya Brahmana, etc.

The basic structure of the ancient law was that laid down in the Smritis which was supplemented and varied by custom. This, however, was only its early character. Subsequently, it made remarkable progress during the post smriti period (commencing about the 7th Century A.D.) when a number of commentaries and digests (Nibandhas and Tikas) were written on it. Medhatithi in his commentary on the Manusmriti wrote that the Smritis were only codifications of the existing customs, and the same has been said in the Smriti Chandrika (which is the basic text of the Dravida school of Mitakshara) and the Vyavahar Mayukha (which is a basic text of the Bombay school of Mitakshara).

There are two kinds of sciences (1) natural science and (2) social science. The natural sciences study inanimate matter (e.g. physics, chemistry, etc.) or living organisms like plants and animals (botany and zoology) and also the physical body of human beings (medical science, including anatomy, physiology etc.). Natural law theories arose during the periods of historical transitions and turmoils e.g. during the American and French Revolution. The separation of law from ethics and religion was a great advance in Europe from the feudal era (in which they were all mixed up). "The science of jurisprudence" Austin says "is concerned with positive laws, or with laws strictly so called, as considered without regard to their goodness or badness". While positivism was a great advance over natural law and was suited to modern industrial society, it had a great defect and that was this: it rigorously excluded a study of the social, economic and historical background of the law. Positivism only studied the form, structure, concepts etc. in a legal system. Normativism is an essential feature of a legal order. A law is a norm (or rule of conduct) meant for repeated application, and not exhausted by its fulfillment once. A law reflects a certain social or economic relationship, and this relationship is created by the productive forces then

prevalent in a given society. At present, modern western jurisprudence is undergoing a deep crisis. Despite creating a host of schools and theories, it seems to have exhausted the possibility of any further development and is lying stagnant. However, solutions to vital problems still eluded.

Ancient Indian Jurisprudence and Modern Jurisprudence. Ancient Indian jurisprudence related to semi feudal and feudal society, whereas modern jurisprudence is related to industrial society. Since the economic cycle in feudal society kept repeating itself for centuries (e.g. the kharif crop during the monsoons, rabi crop in winter, then again the kharif crop in the next monsoon, and again the rabi crop thereafter, etc.), without radical changes in productive techniques, society was relatively stable. Consequently, the main form of feudal law was customary law supplemented by written texts. The main source of law in modern times is legislation. This is in sharp contrast to customary law which evolved very slowly over the centuries without radical and abrupt departure from the past. Since each major technical advance in modern industrial society brings about a change in social relations, it calls for new legal norms, which is not possible by slow customary growth.

[To be continued.....]

# शास्त्रशिक्षणे मङ्गलाचरणम्

**Sri. CHITTARANJAN RAJ**
Research Scholar, Dept. of Sanskrit, SCSVMV, Kanchipuram

शिष्यते अनेन इति शास्त्रम्। यत् अस्माकं जीवनशैलीं मार्जयति तथा सुखमयजीवनाय प्रेरयति तदुच्यते शास्त्रम्। संस्कृतजगति बहूनी शास्त्राणि राराज्यन्ते। यथा- व्याकरणशास्त्रम्, न्यायशास्त्रम्, वेदान्तशास्त्रम्, ज्योतिषशास्त्रम् (इत्यादीयानि) प्राचीनकाले जनाः मोक्षप्राप्तये तथा ज्ञानाय गुरुकुलपरम्परायां एतेषामध्ययनं कुर्वन्ति स्म। शास्त्रशिक्षणे काचित् शैलीं एवं परम्परां अनुसृतवन्तः अस्माकं पूर्वजाः। तासु परम्परासु एका परम्परास्ति मङ्गलाचरणपरम्परा। तां परम्परां सर्वेषु शास्त्रेषु अचार्याः अनुसरन्ति।

**मङ्गलाचरणस्यार्थः**

मङ्गलस्य आचरणम् मङ्गलाचरणम् इति। इह खलु प्रायः सर्वेऽपि ग्रन्थकाराः ग्रन्थारम्भसमये मङ्गलमाचरन्तीति सर्वसंप्रतिपन्नम्। ग्रन्थादिनां प्रारम्भः शुभप्रार्थनया वा इष्टदेवस्य स्मरणेन तथा च कथावस्तुनः निर्देशेन क्रियते तत् भवति मङ्गलाचरणम्। क्रियमाण-कार्यस्य निर्विघ्नेन परिसमाप्तिर्भवतु इति मनसि धिया ग्रन्थारम्भे मङ्गलमाचर्यते। स्वेष्टजनस्य स्वस्य वा शुभाशंशनम् स्वात्मनेच्छाप्रकटनं भवति मङ्गलाचरणम्। व्याकरण-महाभष्ये पतञ्जलिना उक्तं यथा-शिष्टाचारप्राप्तं मङ्गलं शिष्यशिक्षायै निर्विघ्नाति प्रारीप्सित-प्रतिवन्धकशमनाय कृतं समुचितस्वेष्टदेवता-नमस्कारात्मकं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतृणामनुषङ्गतां मङ्गलाय क्रमशो निबघ्नाति। मङ्गलाचरणविषये मङ्गलवादे निरूप्यते यथा-

**अविगीतशिष्टाचारपरम्पराप्राप्तो परमशिष्टेन वार्तिककृता कृतोऽपीष्टदेवतानमस्कारो ग्रन्थे न निवेशितः।। १**

एवम् वदन् मङ्गलाचरणे शिष्टाचारः प्रमाणमिति सूचयति। तात्पर्यटीकापरिशुद्धौ उदयनाचार्यः- कार्यारम्भे प्रारब्धस्यान्तरायविरहेण परिसमाप्तिं कामयमानाः अभीष्टदेवतानमस्कारपूर्वकं प्रेक्षावन्तः प्रवर्तते। तत्र न्यायभूषणकाराः- प्रणाकृतेन हि मङ्गलेन अधर्मप्रतिबन्धकेन अधर्ममूला विघ्नविनायकाः प्रत्सार्यन्ते। ततः शास्त्रपरिसमाप्तिरित्यर्थवान् प्रमाणम्। वैशेषिकदर्शने अथातो धर्मं व्याख्यास्यामः इति प्रथमसूत्रे आदौ अथशब्दं प्रयुञ्जानः कणादो मङ्गलमाचरति स्मेति उपस्कारकारो व्याचष्टे। न्यायकन्दलीकारोऽपि प्रणम्य हेतुमीश्वरम् इति श्लोकं व्याचक्षाण आह कर्मारम्भे हि देवता गुरुश्च नमस्क्रियते इति शिष्टाचारोऽयम्। स्मृतिकारोऽपि मनुस्मृतौ उक्तम् -६

**मङ्गलाचरणयुक्तः स्यात् प्रयतात्मा जितेन्द्रियः।**
**जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः।।**
**मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम्।**
**जपतां जुह्वतां चैव विनिपातो न विद्यते।।**

दीपिकाकारः अन्नम्भट्टः शिष्टाचारेणानुमिता समाप्तिकामो मङ्गलमाचरेत् इति श्रुतिः ग्रन्थारम्भे मङ्गलकर्तव्यतायां प्रमाणम्।

मङ्गलाचरणस्य प्रकाराः- मङ्गलाचरणविषये बहवः बहुधा उक्तवन्तः तेषु काव्यादर्शकारः दण्डी सुस्पष्टं प्रतिपादितवान् काव्यादर्शे। यथा- **आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्।।** (काव्यादर्श-प्र-१४) (आशीः नमस्क्रिया वस्तुनिर्देशः वा अपि तत् मुखम्) आशीः नमस्क्रिया वस्तुनिर्देशोऽपि वा एतत्त्रितयान्यतमद्वारा तस्य (महाकाव्यस्य) प्रारम्भं क्रियते। मङ्गलाचरणं त्रिविधं भवति। तत् यथा

१- आशीर्वादात्मकम् (शुभम्,आशंसनम्,मङ्गलम्,कामना....)
२- नमस्कारात्मकम् (नमस्कारः,नम,नतमस्तकम्,विनयः....)
३- वस्तुनिर्देशात्मकम् (नायकनिर्देशः,आवासः,देशः,कालः.....)

**आशीर्वादात्मकम्**

आशीर्वादस्य विवक्षा भवति कवेः। स्वापकृष्टेन अन्यस्य उत्कर्षप्रदर्शनरूपकवाक्यं भवति आशीर्वादात्मके। तत्र करशिरसंयोगोत्मक भवति एवं शिरभूमिसंयोगः भवति। पुत्रस्ते भवतु, धनं मे स्यात् वाक्यादिषु एवं रूपेण भावः प्रकटः भवति। तत्र नीतिवर्मणः कीचकवधम् तथा नीलकण्ठदीक्षितस्य शिवलीलार्णव इत्यादिग्रन्थे आशीर्वादात्मकमङ्गलाचरणं दृश्यते।

**नमस्क्रियात्मकम्**

काव्यं समाजस्य निधित्वेन मन्यते तस्मात् तस्य कर्ता विनयशीलयुक्तो भवेत्। मदपेक्षया त्वमुत्कृष्टम् इति मत्वा स्वापकर्षबोधनानुकुलव्यापारविशेषः वाचिककायिकमानसिकत्वेन करशिरः संयोगादिरूपेण मङ्गलमाचरति। यथा-

**वागार्थाविव संम्पृक्तौ वागार्थप्रतिपत्तये**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।** (रघुवंशम्)

**वस्तुनिर्देशात्मकम्-**

वर्णनीयकथाभागस्य प्रकारेण केनचिदुपनिवन्धः स च क्वचिन्नायकनिर्देशेन कश्चित् तदावासः देशनिर्देशप्रकारेण काव्यस्य या कथा तस्याः आंशिकवर्णनम् यदि मङ्गलाचरणे दृश्यते तर्हि तत् वस्तुनिर्देशात्मकं मङ्गलाचरणम् ।तत् बहुप्रकारकम् भवितुमर्हति यथा-

**१-नायकनिर्देशद्वारा (शिशुपालवधम्)**

**श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।**
**वशन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनि हरिः ।।**

**२-नायकस्यावासदेशकालदिनिर्देशद्वारा (कृष्णविभवः)**

**राकासुधाकरसितद्युतिदीप्यमानसौ**
**धावलीविलसिता मधुराभिधाना।**

**आसीदशेषविभवैरुपचीयमानै-**
**र्युक्ता पुरा यदुकुलोत्तमराजधानी ।।**

**३-कथायाः वस्तुनिर्देशः (कुमासम्भवम्)**

**अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।**
**पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ।।**

**नाटकेषु मङ्गलाचरणम्**

नटकेषु मङ्गलाचरणं नान्दीत्युच्यते। दर्पणकारः विश्वनाथेन साहित्यदर्पणे नान्देः लक्षणं एवं भणति यथा-

**यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।**
**कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः य उच्यते ।। ६-२२**
**प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।**
**तथाऽप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।। ६-२३**

नाटके नटः वा सूत्रधारः आगत्य प्रप्रथमे मङ्गलमाचरति।

**आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।**
**देवद्विजनृपादीनां तस्मन्नान्दीति संज्ञिता ।। ६-२४**
**मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।**
**पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ।।**

नाट्यशास्त्रकारः भरतः नाट्यशास्त्रेऽपि नान्दिविषये सम्यक् प्रतिपादयित यथा-

**तस्य तद्रूपसम्बन्धात्पूजा नान्दीति कथ्यते ।**
**देवतादिनमस्कारमङ्गलारम्भपाठकैः ।।**
**या क्रिया नन्दते नाट्यारम्भे नान्दीति सा स्मृता ।**
**या पूर्वरङ्गसम्बन्धाविंशत्यङ्गवर्तिनी ।। (सप्तमाध्यायः)**

न केवलं साहित्यशास्त्रे अपि तु सर्वेषु शास्त्रेषु मङ्गलाचरणस्य महत्वं भवति । शास्त्रशिक्षणे मङ्गलाचरणं मुख्याङ्गरूपेणासीत् भवत्यपि।

# काव्यपुरुषः

**Sri. L. ANANDHAN**
Research Scholar, Dept. of Sanskrit, SCSVMV, Kanchipuram

राजशेखरस्य काव्यपुरुषकल्पना स्वसमन्वयवादिनीं दृष्टिं स्पष्टीकरोति। शब्दः अर्थः इति द्वौ एतौ काव्येन समन्वितौ स्तः। रसः आत्मा भावति, ध्वनिश्च तस्य प्राणाः। यद्यपि प्राणैरेव जीवनस्य कार्याणि चलन्ति, तथापि आत्मनः विना प्राणाः किमपि कर्तुमक्षमाः सन्ति। रसस्य अस्तित्वे सति ध्वनिः काव्यं सजीवं करोति। माधुर्यादयः तस्मिन् ध्वनौ गुणाः सन्ति, ये काव्यस्य उत्कर्षत्ववर्धने कारणभूताः सन्ति। मनुष्यास्तु सर्वे सन्ति, किन्तु सौशील्यादिगुणैः सम्पन्न एव मनुष्यः सम्मानं प्राप्नोति। गुणस्य आत्मना सह, अलङ्काराणां शरीरेण च सह विशेषसम्बन्धः वर्तते। तत्राद्यः अन्तःसौन्दर्यं वर्धयति, द्वितीयश्च बाह्यसौन्दर्यम्। शब्दार्थौ काव्यावयवौ इत्यतः अलङ्कारोऽपि शब्दस्य अर्थस्य चापि भवति। सुन्दरस्य सौन्दर्यवर्धनम् अलङ्कारेण कर्तुं शक्यं, परं तेन सौन्दर्यस्थानमेव प्राप्तुं न शक्यते।

वैदर्भी, गौडी, पाञ्चाली इत्यादिरीतयः गुणैः सह विशेषरूपेण संबन्धं यान्ति। एताः अवयवसंस्थानवद्भन्ति याः काव्यशरीरस्य सुष्ठु सङ्घटनं कुर्वन्ति। इदमेव सङ्घटनं काव्यशरीरसौन्दर्यं निर्णयति। यथा मनुष्येषु केचित् अन्धाः केचित् बधिरा वा सन्ति, तथैव काव्येष्वपि कानिचित् श्रुतिकटुत्वादिदोषयुक्तानि भवन्ति। एते दोषाः काव्यगुणान् ह्रासयन्ति। इत्थं काव्यपुरुषस्वरूपम् उपस्थाप्यते। रसः एव तस्य आत्मा, आत्मना एव जीवनगतिदाः प्राणाः, गुणः, रूपम्, अलङ्कारः

इत्यादयः भावाः लगन्ति। यदा काव्यं सम्पूर्णतया स्वविशेषताभिः समन्वितं सत् भव्यम् आकर्षकं च रूपं प्राप्य पठित्रग्रे तिष्ठति, तदा स्वयमेव मनसि रमणीयतोत्पद्यते। ईदृश काव्यस्य पठनेन श्रवणेन अभिनयेन वा प्रत्येकं मनसि उद्भूयमानानां भावतरङ्गाणामनुभूतिरेव रसानुभूतिरिति कीर्त्यते। एष एव अलौकिक आनन्दो भवति यस्य हृदि सञ्चरणम् उत्तमेन काव्येन क्रियते।

वाक्ये वाक्ये, पदे पदे च काव्यत्वान्वेषणेन काव्यस्य सामाजिकधार्मिकार्थिकराजनीतिकधामसु तादृशविवेचनं न शक्यमासीत् यथाधुनिके क्रियते। परन्तु शैल्याः तथा सङ्घटनस्य विषये संस्कृतभाषायां यावत् यादृशं च सूक्ष्मविवेचनं कृतं भवति, न तथा इतरभाषासु क्वचिदपि भवति। आचार्येण मम्मटेन ध्वनिकाव्यस्य भेदाः कृताः, परं तेषां विवेचनक्षेत्रीभूतानि वाक्यानि शब्दार्थसीमायामेव भवन्ति। विवेचनप्रवृत्तेः एकमात्रा दिग्वर्तते - अन्यसामान्यवाक्येभ्यः चमत्कारपूर्णवाक्यानां लोकोत्तरत्वस्यान्वेषणमिति। तथापि शब्दस्य भेदोपभेदकरणवेलायां विविधभेदानां वर्ण्यविषयादीनामपि यथास्थानं सङ्केतः कृतो भवति।

**भारतवाणी**

**यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति।**
**तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति।। १.३.९४**

அறத்தை விட்டு உபதேசிப்பவன், அறத்தை விட்டுக்கேட்பவன் இவ்விருவரில் அறத்தை விட்டவன் பகையை அடைவான். இறந்தும் போவான்..

# पदरञ्जनी - १८

**Dr. N. SRIDHAR,**
Srinivas Fine Arts Pvt Ltd. Chennai - 31

(अस्य समीचीनमुत्तरं editorsamskritasri@gmail.com प्रति ई-मैल् कर्तुमपि शक्नुवन्ति। समीचीनोत्तरप्रदातॄणां नामप्रकाशनम् अग्रिमसञ्चिकायाम्।)



**वामतः दक्षिणम्** - १. सीतायाः पिता, मिथिलायाः राजा (३), २. अत्रिमुनेः पत्निः। इयं वनवासे सीतायै वस्त्रम् आभूषणानि च अददात्। (४), ६. श्रीराम-सीतयोः पुत्रः। (सम्बोधने) (२), ७. अयम् इन्द्रस्य आज्ञया लङ्कां निर्मितवान्। (४), ८. या धातोः कर्तरि लिट् प्र.पु.

बहु.व. परस्मै. (२) ९. दशरथपुत्रः, अयोध्यायाः राजा (२), १०. मङ्गलग्रहः (२), ११. लक्ष्मणस्य माता (३), १२. श्रीरामस्य अनुजः, ऊर्मिलायाः पतिः (३), १३. रावणस्य भ्राता, अयं श्रीरामेण चित्रकूटे हतः, गर्दभः (२), १७. वानरराजः, अञ्जनायाः पतिः, हनुमतः पिता (३), १८. रावणस्य भ्राता, श्रीरामस्य भक्तः (४), २१. अयं गङ्गां भूमौ आनीतवान् (४), २२. हंसमन्त्रः, न जप्यते (३), २४. वानरविशेषः (सम्बोधन्) (२), २६. अयं सीतायाः रक्षणायै रावेण सह युद्धे हतः, पक्षिविशेषः (३), २७. गृहात् बहिः गन्तुं वा अन्तः आगन्तुं वा मार्गः (२), २८. अस्य षष्टिसहस्रपुत्राः मर्हर्षिणा कपिलेन दग्धा (३), २९. दशरथस्य पिता (२) ३०. गौतमपत्नी (३), ३१. श्रीरामस्य पत्नी (२),

**उपरिष्ठात् अधः** - १. अयं मुनिः गङ्गां पीत्वा कर्णेन निष्कासितवान् (२), ३. समुद्रे सेतु निर्माणम् अकरोत्, विश्वकर्मपुत्रः (२), ४. जनकस्य अनुजः, सांकाश्यायाः राजा (४), ५. झषः (३), ७. अस्य ब्रह्मर्षेः यागस्य रक्षणं कर्तुमेव रामलक्ष्मणौ गतवन्तौ। (४), ८. मृत्योः अधिष्ठातृदेवता (२), ९. लङ्कापतिः, दशग्रीवः (३), १०. पुलस्त्यमहर्षेः पुत्रः, धनाध्यक्षः (३), १२. सीतारामयोः पुत्रः (३), १४. भरतस्य माता, दशरथपत्नी (३) १५. रावणस्य भ्राता, अयं श्रीरामेण चित्रकूटे हतः (३), १६. निषादराजः, श्रीरामस्य मित्रम् (२), १९. रामस्य अनुजः, अयं रामपादुकां नीत्वा शासनम्

अकरोत् (३), २०. लङ्कायाः राक्षसी, इयं सीतायै प्रियवाक्यम् अवदत् (३), २१. अस्य मुनेः आश्रमे एव श्रीरामः अयोध्यां प्रतिगमनावसरे किञ्चित् कालं तिष्ठति। (४), २२. न जरः (३), २३. पाति शरीरं मलनिस्मारणेनेति, मलद्वारम् (२), २५. श्रीरामस्य माता, दशरथपत्नी (३)

## पदरञ्जनी - १७ (उत्तराणि)

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ल[1] | ला[2] | टि | का[3] | | | शि[4] | ख[5] | रि | णी |
| पि[6] | टः | | क[7] | न[8] | क[9] | क्षा | रः | | |
| तम् | | व[10] | ली | व | र्दः | | | अ[11] | कम् |
| | व[12] | हु | | नी | | राः[13] | | भ्य | |
| व[14] | | पा[15] | णि | त | लम् | | र[16] | ङ्गः | |
| सु[17] | ख[18] | दः | | कम् | | पा[19] | | | मा[20] |
| म[21] | रुः | | भाः[22] | | पा[23] | क | शा | स[24] | नः |
| ती | | अ[25] | | वि[26] | र | लम् | | चि | |
| | भ्र[27] | म | णम् | | श्व | | वि[28] | दा | चः |
| द्रु[29] | म | रः | | अ[30] | धि | राट् | | न | |
| प[31] | रः | | मै[32] | ना | कः | | क[33] | न्दः | |
| दः | | ला[34] | | म | | त[35] | था | | पः[36] |
| | क[37] | म | नी | चम् | | र[38] | म | तिः | |

# साहित्यचित्रम्



(शिल्पम् कर्णाटकराज्ये बेलूरुतः)

तदर्जुनो वीर्यवतां सदर्पस्तदैन्द्रिरिन्द्रावरजप्रभावः।
सज्यं च चक्रे निमिषान्तरेण शरांश्च जग्राह दशार्धसङ्ख्यान्।।
विव्याध लक्ष्यं निपपात तच्च छिद्रेण भूमौ सहसातिविद्धम्।
ततोन्तरिक्षे च बभूव नादः समाजमध्ये च महान्निनादः।।

महाभारतम् १.२०३.२४-२५

Registration with Registrar News Paper of India 30478 / 77

SAMSKRITASRI

मैत्रीं भजताऽखिलहृज्जेत्रीम्
आत्मवदेव परानपि पश्यत।
युद्धं त्यजत, स्पर्धां त्यजत
त्यजत परेष्वक्रममाक्रमणम्
जननी पृथिवी कामदुघाऽऽस्ते
जनको देवः सकलदयालुः
दाम्यत दत्त दयध्वं जनताः
श्रेयो भूयात्सकलजनानाम्॥



Printed by: Zigma Graphics, 9/1, Thirtharappan Street, Triplicane - 5
Edited and Published by Sri S. Srinivasa Sarma on behalf of the
Samskrit Education Society (Regd.)
Old 212/13-1, New No, 11, St. Mary's Road, R.A. Puram, Chennai - 600028.